* श्रीः *

# कामदंश्रीराममहिम्नस्तोत्रम्

## श्रीरामसुचित्ताचार्य विरचितम् ।

प्रकाशक—
श्रीरामसुचित्ताचार्य
राज्यज्योतिषी डुमरांवराज
मु० मलुआ० पो० गोठिनी
( जि० छपरा )

मुद्रक—
जयकृष्णदास गुप्त
विद्याविलास प्रेस, गोपालमन्दिर लेन,
बनारस सिटी ।

१९३०

# भूमिका

संस्कृतभाषा हि भारतीयसाहित्यस्य तथा शिक्षायाश्चाधारोऽस्ति, किन्तु कालक्रमेण घटनाचक्रेण चेयं प्रत्यहं लुप्तप्राया दृश्यते, कियन्तो जना अस्याः काठिन्यमनुभूय संस्कृतस्यानुशीलनेऽरुचिं दर्शयन्ति तथा पाश्चात्यशिक्षापरायणा अपि अस्या श्रेष्ठतां माधुर्यञ्चावगच्छन्तोपि संस्कृतस्यादिमशिक्षाया अभावात् मुखमपसारयन्त्यतस्वानन्दात्मस्वरूपपराङ्मुखा इमे पुरुषा स्वीयमतिदुर्लभं मानुषशरीरं काममोहादिविविधभीषणतापज्वालाजटिले संसारानले जुह्वति।

अथ चास्मिन् भारतवर्षे संस्कृतभाषा-भाषिणो वहवो विद्वांसः सन्ति, किन्तु भूयांसो विपश्चितः शृङ्गाररसात्मकनाटकोपन्यासादिकं विरच्य तैरात्मानं कृतकृत्यं मन्यमानाः श्मश्रु निपीडयन्ति। अवगन्तव्यं वाचकवृन्दैर्विद्यावतां हृदयं यावद्भक्तिरसाक्षालितं न भवति तावत्तेषां निखिलशास्त्राभ्यासश्रमो मुधैवेति। यद्यपि प्राचीनविद्वद्वरविरचितानि देवतायाः स्तोत्राणि भारतवर्षे प्रायःप्रतिगृहं विद्यमानानि सन्ति, परंत्ववर्चीना अद्यापि एषामुन्नतौ अकिञ्चनत्वं दर्शयन्तः सन्ति इति न जानेऽत्र किं रहस्यं तथाहं त्वेवं मन्ये यत् अनेकजन्मसंस्कारादीश्वरेऽनश्वराभक्तिस्तद्गुणवर्णने प्रतिभा च भवति। अन्यथा महर्षिः श्रीवाल्मीकिः तुलसीदासश्च कथमस्मिन् भूतलेऽद्वितीयं यशो लेभे।

अस्यां दशायां भगवद्भक्तिपरायणेन नववयस्कानां विदुषामुत्साहं परिवर्द्धयता श्रीभोजकुलकमलदिवाकरभोजपुराधीशमहाराजश्रीकेशवप्रसादसिंहवर्म्मणो लब्धप्रतिष्ठेन श्रीरामसुचित्तसूरिणा विरचितं सकल सुरासुरपूजितपादयुगलस्य सगुणरूपस्य साक्षाद्ब्रह्मणः श्रीरामचन्द्रस्यापूर्वगुणवर्णनरूपमिदं कामदं श्रीराममहिम्नःस्तोत्रं ईश्वरानुरागसमर्पितचित्तैः पुरुषैरवश्यमेव रत्नमिवोरसि निधेयम्। यतोऽरसास्वादं पाठानुसारं पुण्यराशिञ्च नरोलभेरन्। अतःपाठकसुखादिप्रयोजनमनेन महानुभावेन विरचितमिदं स्तोत्रं प्रयातु सफलतां त त्संतोषोत्पादनेनेत्याशास्ते।

श्रीहरिशङ्करपाण्डेयः
व्याकरणाचार्यः,
विहारओडिसासंस्कृतविभागस्य
निरीक्षकश्च

---

श्रीः

श्रीगणेशायनमः । श्रीसीतारामचन्द्राभ्यां नमः

श्रीभरतलक्ष्मणशत्रुघ्नेभ्यो नमः

श्रीरामसुचित्तउवाच

( द्रुतविलम्बितं वृत्तम् )

श्रुतय ईश ! महिम्न्युदधौ दधु-
स्तवयशोऽवचयेऽपचयं ध्रुवम् ॥
इतरथा कथमुज्झितमानिता
इति ननेति गृणन्त्यविनिश्चितम् ॥ १ ॥

प्रभुरयं रजनीशकलाधरो
ध्रुवमनन्यमनास्त्वयि वर्तते ॥
अवसिता हि गिरोऽप्यजशेषयोः
कथय कः स्तवनेऽस्ति विभुर्विभो ! ॥ २ ॥

सुमनसां मनसोऽप्यतिदूरगे
तव महिम्नि न कस्य समादरः
निजवचांसि पवित्रयितुं प्रभो !
निगदितुं न च ते सकलं यशः ॥ ३ ॥

न सकलं सकलैरपि गृह्यते
शकलमेव गृणन्ति यथा तथा ॥
अहमपीह विदेहसुतार्तिहन् !
यशसि ते यशसेऽस्मि सदाग्रही ॥ ४ ॥

जगदमङ्गलमूलनिकृन्तनम्
जनकजेश ! यशस्तव निर्मलम् ॥
सुकृतिभिः कृतवाग्विषयं परं
वृजिनमाश्वपहन्ति ददाति शम् ॥ ५ ॥

सति मनोरथकल्पकुटेऽमिते
इह हि नाम्नि मनावपि नाथ ! ते ॥
कथम कं मनुजैरनुभूयते
इदमसंगतमेव विनेशया ॥ ६ ॥

श्रियमनन्यपरामतिपावनीं
श्रयसि तेन न तेऽच्युत ! विक्रिया ॥
भवति कापि कदापि सनातनी
प्रकृतिरित्यविकारिणि शाश्वते ॥ ७ ॥

त्रिगुणभिन्नतनुस्तनुतेऽखिलं
सृजति पात्यवसाययति त्रिधा ॥
त्रिभिरभिन्नशरीरिणि माधवे
किमतिचित्रमुपैति न यद्धरे ॥ ८ ॥

सरस-नीरद-नील-मनोहरां
तनुमनिष्टहरामखिलेष्टदाम् ॥
शशिनिभाननमम्बुरुहेक्षणं
क्षणमपीच्छ यदीच्छसि वाञ्छितम् ॥ ६ ॥

स्मितविकाशि निशेशसमप्रभं
स्मरसहस्रशतादपि सुन्दरम् ॥
दशरथात्मजमञ्जुमुखाम्बुजं
मम मनो न विमुञ्चतु कर्हिचित् ॥ १० ॥

अरुणिताश्रुनिरुद्धनिरीक्षणै-
रभिलषत्यवधेश ! भवत्पदम् ॥
मम मनोऽधिकलुब्धमकिञ्चनो
निखिलभूमिपतित्वमिवाधिहन् ॥ ११ ॥

अयि विभो ! भवदंघ्रिसरोरुहं
सुरवरैरपिमृग्यमपेक्षितम् ॥
विरहिणीव विलोकयितुं प्रियं
ललति वाञ्छति धावति मे मनः॥ १२ ॥
ललितलोलवलच्छ्रुतिकुण्डलं
कलितकुञ्चितकुन्तलमण्डितम् ॥
सुमणिमृष्टकपोलमलङ्कृतं
रघुवरास्यमपास्य कुतः सुखम् ॥ १३ ॥
प्रकृतिरीश ! जडा भवदाश्रया-
दुपचितेति वदन्ति विपश्चितः ॥
तव पदाब्जरजोभिरहो कृता
दृषदि वृद्धिरनुज्झितचारुता ॥ १४ ॥
प्रदलिते किल शंभुशरासने
नृपदलं दलितं सबलं स्वयम् ॥
दलितमाधिभया धृतिमण्डलं
न खलता दलिता नु ? सताऽसताम् ॥१५॥

धनुरघौघवधे धृतपातकं
स्वमथमन्मथहृत्करविग्रहम् ॥
शमयितुं तव तीर्थवरे करे
विदिवसंहननं स्वयमत्यजत् ॥ १६ ॥

अशनिसारवतो धनुषः पणे
सगणरावणबाणमुखेश्वरान् ॥
अवधनाथ ! विलोक्य जितांस्त्वया
चकमिरे भगवन्तमथो श्रियः ॥ १७ ॥

अवनिजावदनेन्दुसुधैधिता
विबुधतां विदधाति भवन्नृणाम् ॥
दधत ईश ! तया सह ते पदं
सुलभयन्ति जगन्ति पदे पदे ॥ १८ ॥

खर-विराध-कवन्ध-वधे ध्रुवं
भगवता भवता श्रुतिचक्षुषा ॥
विधिरवेद्य कृतोऽविद्दितः परै-
र्भवतु तद्भुवनस्य विभूतये ॥ १९ ॥

गजजटायुरजामिलभिल्लिका
प्रियतमोऽस्य विभिन्नमना यदि ॥
वद वयं क्व भवन्तमिवापरं
कमथवा शरणं मृगयामहे ॥ २० ॥

कपिपतिः प्रियया प्रतिबोधितो
यदनुजं हि निजं भवदाश्रितम् ॥
अवगतो न ततो विगतोऽसुभि-
श्शरणादार्यशरेण तु मोचितः ॥ २१ ॥

सरलतादिगुणैः सहितः शर-
श्चर इवातिनिगूढनियोजितः ॥
बलिनमाशिवह वालिनमर्दयन्
हरिवराय विभूतिमथार्पयन् ॥ २२ ॥

रिपुवधं ह्युररीकृतमावहन्
स्वरिपुमित्रवधं परिकल्पयन् ॥
क्षयकरं समरं विनिवर्त्तयन्
नरसुरारिपतेर्बलमल्पयन् ॥ २३ ॥

अगणितां ध्वजिनीमुपपादयन्
रहसि केवल इष्टमिवाचरन्
निखिलनीतिनिदानविदा त्वया
कथय नाथ! न किं कृतवानसौ ॥ २४ ॥

जलनिधिस्तु सभाजयदञ्जसा
भवदुदन्तहरं श्वसनात्मजम् ॥
धिगिति भाविनि दुःसमये धियां
मलिनतां यदनार्चदितं प्रभुम् ॥ २५ ॥

जलनिधिं परिभूय दशाननं
सकुलमप्रिपदात्मसलोकताम् ॥
ससहजः प्रियया सहितः स्वराड्
जयति विश्वपतिः समहीपतिः ॥ २६ ॥

सुतसुखार्थयशांस्यभिवाञ्छथ
यदि तदा मनुजा मम शंसनम् ।
शृणुत राममजं भजतेष्टदं
पठत रामसुचित्तकृतं स्तवम् ॥ २७ ॥

(शिखरिणी वृत्तम्)

विदित्वा वास्वेशं स्मृतनिजनियोगस्तु जलधि-
र्जड़त्वे युक्तोऽहं किमु पुनरनेनार्थित इति
द्विधाऽऽदेशो राज्ञो भृतक इव कर्तव्यजड़तां
गतो नार्चत्तेनाभवदथभवाँश्चापि मुदितः ॥२८॥

विजित्वा लङ्केशं सकुलममलां कीर्तिमचलां
वितत्यायोध्यायामगमदपि भूपत्वमभजत् ॥
नमस्तस्मै कर्त्रे जगत उत हर्त्रेऽपि च नमो
नमस्त्रात्रे तुभ्यं परमपददात्रे भगवते॥ २६ ॥

न किञ्चिन्नीलेन्दीवररुचिरकान्तेरिव परं
मनोज्ञं विज्ञेयो न च रघुवशादन्यविषयः
विकल्पो नाप्यल्पो विषय इह कल्प्यः सुकृतिभि-
र्नरामाख्यादन्याः क्वचिदपि गिरःसन्ति सरसाः३

अजामाद्यां तुभ्यन्निखिलभुवनं भावयसि यत्
तयैवैतच्छक्त्यावसि विविधवैकल्पगुणया
स्वयं साक्षीरक्षी विरहितगुणोऽप्यार्तिहरणो
दयार्द्रः श्रीरामस्त्वमसि मम हेनाथ शरणम्॥३१॥

हरिर्ब्रह्मारुद्रो गणपतिरजार्कप्रभृतय-
स्त्वमेवासीशा!त्रास्ति न किल विभेदोपि च मनाक्
प्रपूज्यो लोकानां निजजनमनः कल्पविटपी
दयार्द्रः श्रीरामस्त्वमसि मम हे नाथ ! शरणम् ३२

पदं त्यक्त्वाऽबाधं सकलसुखदं तेऽप्यभयदम्
मतं चैतत्तथ्यं वितथमिति वा व्यर्थकथया ॥
समावह्वयो नीता नहि किमपि लब्धं फलमतो
दयार्द्रः श्रीरामस्त्वमसि मम हे नाथ ! शरणम् ३३

निषादोऽसौ पूतोऽभवदथभवत्पादरजसा
तथान्ये गृध्राद्याःसकृदपि भजन्तोऽपि कृतिनः ॥
धिगेतत्कौलिन्यं यदजनिसुरागोनचरणे
दयार्द्रः श्रीरामस्त्वमसि मम हे नाथ ! शरणम् ३४

महाश्वादुर्दान्ताः प्रसभमवरं सा दिनमिव
हरन्त्येते चित्तं निजविषय एवेन्द्रियगणाः ॥
उपायैराख्यातैर्दमितुमसमर्थोऽस्मि नितराम्
दयार्द्रःश्रीराम० ॥ ३५ ॥

जराशोगो दैन्यादिकमखिलदुःखं जनिमतां
भवत्पादद्वंद्वाम्बुजविमुखतायाः फलमिदम्
तथाप्येषा माया द्रढयति पदे स्वे बलवती
दयार्द्रःश्रीराम० ॥ ३६ ॥

मुनीनां मान्यानां चरणशरणं नाभिलषितं
न वा दत्तं प्राज्यं धनमपि च दीनाय कृतिने।
तपस्तप्तं तीर्थे क्वचिदपि मया नास्तिकधिया
दयार्द्रःश्रीराम० ॥ ३७ ॥

तवाहं विश्वात्मन् ! वरद ! पुनरेवास्मि भवतो
व्रतं वा वात्सल्यं शरणद ! न ते केन विदितम् ॥
स्थितावस्थां ब्रूयां किमहमपरं वेत्सि सकलं
दयार्द्रःश्रीराम० ॥ ३८ ॥

पिता माता भ्राता गुरुरसि सखासि प्रियतम-
स्त्वदन्यं जानेहं नहि कमपि लोकेशभुवने
अतो याचे भूयः परिहर न मां पाहिकृपणम्
दयार्द्रःश्रीराम० ॥ ३९ ॥

ध्वजच्छत्राम्भोजांकुशकुलिशचक्राङ्कलसितं
गजोर्ध्वाद्यैश्चिन्हैः शुचिभिरखिलैर्नेत्रसुखदम्।
पदाब्जं शोभाढ्यं विगतविमतिः स्वस्थहृदयः
कदा स्मारं स्मारं रघुवरनयाम्यंघ्रिविषयम् ॥४०॥

रे चञ्चरीकचर! चित्त! विचित्रवृत्ते!
चञ्चूर्यमाण। चरणाब्जरजो विहाय॥
चञ्चन्मरीचिचयचारुचमत्कृतेस्तु
सीतापतेर्भ्रमसि किं भ्रमवल्लरीषु ॥ ४१ ॥

धनं धान्यं विद्यां सुतसुवनितारोग्यविजयान्
यशोराज्यं भक्तिं ह्यमृतमपि रामस्य कृपया
यथोद्देशं पाठादवहितमनाःप्रीतिसहितः
नरो ध्यात्वा रामं सकलमपि कामञ्च लभते ॥४२॥

असुरसुरनुतस्य ब्रह्मरामाभिधस्य
निखिलभुवनभर्तुर्जानकीवल्लभस्य।
स्तवनमिदममोघं कामदं मानवानां
वृजिनहरमकार्षीदीश्वरीदत्तसूनुः ॥ ४३ ॥

श्रीरम सूचितकृतं स्तवनं रमाया
नाथस्य विश्ववपुषःसकलेष्टदस्य ।
यःपाठयेत्पठति वा प्रणयेन युक्त-
स्तेनार्चितो भवति विश्वविभुःपरात्मा ॥ ४४ ॥

वाग्भिःश्रुत्यर्थयुक्ताभिःश्रीमद्रामाङ्घ्रिपङ्कजम्
स्तुवन्पूजयते तेन हर्षं यायात्पतिःश्रियः ॥४५॥

इतिकामदंश्रीराममहिम्नस्तोत्रम्

# समर्पणम् ।

श्रीभोजवंशसरसीरुहभास्करस्य
देवस्य केशवप्रसादधराधिपस्य
लब्धादरः सदसि रामसुचित्तशर्म्मा
स्तोत्रं सुकामदमिदं व्यदधाद्वरेण्यम् ॥ १ ॥
सरय्वाश्चोत्तरे तीरे छपरामण्डलान्तरे
भद्रवासपुरेरम्ये भलुआनाम विश्रुते ॥ २ ॥
तत्रासीद्भूमिदेवाग्र्यो दयालुर्नामधर्मवित्
रामनारायणः सूनुस्तस्यधर्मविदाम्बरः ॥ ३ ॥
तत्पुत्रः श्रीश्वरीदत्तो भारद्वाजकुलप्रिय;
रामसुचित्तशर्माहं तत्पुत्रो मन्दधीरपि ॥ ४ ॥
कृपया रामचन्द्रस्य निरमां स्तोत्रमुत्तमम्
तस्मै समर्पितं तेन प्रीयतां रघुनायकः ॥ ५ ॥
इति श्रीश्रीश्वरीदत्तसुनुश्रीरामसुचित्तशर्मविरचितं
कामदं श्रीराममहिम्नस्तोत्रं सम्पूर्णम्
श्रीशुभसम्वत् १९८७ शाके १८५२ कार्तिकशुक्लपञ्च
म्यां रविवासरे सम्पूर्णम् । मो. ता. २६-९-३० ईसवी ॥